[ विद्याभवनसंस्कृतग्रन्थमाला ४ ]

॥ श्रीः ॥

# संस्कृतालोकः

( द्वितीयः किरणः )

सप्तमकक्षाकृते

रामबालकशास्त्री

प्रकाशकः

चौखम्बाविद्याभवन, चौक, बनारस-१



स० २०११ ] [ ई० १९५४

# पाठसूची

॥ श्रीः ॥

# संस्कृतालोकः

## प्रार्थना

त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव ॥ १ ॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ २ ॥

वामाङ्के च विभाति भूधरसुता देवापगा मस्तके ।
भाले बालविधुर्गले च गरलं यस्योरसि व्यालराट् ।
सोऽयं भूतिविभूषणः सुरवरः सर्वाधिपः सर्वदा ।
शर्वः सर्वगतः शिवः शशिनिभः श्रीशङ्करः पातु माम् ॥ ३ ॥

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशम् ।
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यम् ।
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ ४ ॥

सर्वे सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ॥ ५ ॥

## पितृदेवः



श्यामः—भोः राम ! चित्रे उपरि एषः कः ?

रामः—चित्रे उपरि एषः हरेः पितृदेवः ।

श्यामः—अहम् हरेः पितृदेवम् नमामि ।

रामः—अहम् प्रतिदिनम् स्वं पितृदेवं भ्रातृवरं च नमामि ।

श्यामः—चित्रे अधस्तात् एतौ कौ ?

रामः—चित्रे अधस्तात् एकः हरिः द्वितीयः शम्भुः ।

श्यामः—एतौ किम् कुरुतः ? भोः राम !

रामः—एतौ पठतः संस्कृतम् श्याम !

श्यामः—एतौ कस्मात् पठतः ?

रामः—एतौ एतस्मात् पठतः ।

श्यामः—एतौ केन पठतः ?

रामः—एतौ नेत्रेण पठतः ।

श्यामः—एतौ नेत्राभ्याम् पठतः, न हि नेत्रेण ।

रामः—साधु, एतौ छात्रौ नेत्राभ्याम् पठतः ।

श्यामः—त्वम् पश्यसि चित्रम् नेत्राभ्याम् ?

रामः—अहम् पश्यामि चित्रम् नेत्राभ्याम् ।

श्यामः—यूयम् पश्यथ चित्रम् नेत्राभ्याम् ?

रामः—वयम् पश्यामः चित्रम् नेत्राभ्याम् ।

**अभ्यासाय**—उपरि एषः कः ? सः हरे कः ? त्वम् चित्रम् पश्यसि ? एतौ छात्रौ केन पश्यतः ? वयम् नेत्राभ्याम् पश्यामः । एते नेत्राभ्याम् पश्यन्ति ।

## वर्तमाने लट्

| | प्र० पु० | म० पु० | उ० पु० |
|---|---|---|---|
| ए० व० | पश्यति | पश्यसि | पश्यामि |
| द्वि० व० | पश्यतः | पश्यथः | पश्यावः |
| ब० व० | पश्यन्ति | पश्यथ | पश्यामः |

## कर्त्तरि प्रथमा

| | ए० व० | द्वि० व० | ब० व० |
|---|---|---|---|
| पितृ | पिता | पितरौ | पितरः |
| राजन् | राजा | राजानौ | राजानः |
| पथिन् | पन्थाः | पन्थानौ | पन्थानः |

[ ४ ]

## राजा



नरेन्द्रः—सुरेन्द्र ! चित्रे उपरि एषः कः ?

सुरेन्द्रः—चित्रे उपरि एषः कश्चन बालकः ।

नरेन्द्रः—न कश्चन, एषः राजकुमारः ।

सुरेन्द्रः—एषः राजकुमारः ? अपरौ अधस्तात् कौ ?

नरेन्द्रः—एवम्, अपरौ अपि राजकुमारौ ।

सुरेन्द्रः—एते किम् कुर्वन्ति अत्र ?

नरेन्द्रः—एते राजकुमाराः अत्र लिखन्ति ।

सुरेन्द्रः---एते लिखन्ति अहम् पश्यामि नेत्राभ्याम् ।

नरेन्द्रः—त्वम् वद राजानम् यत् एते कुमाराः अत्र तिष्ठन्ति

सुरेन्द्रः—अहम् गच्छामि वदामि च यत् कुमाराः अत्र लिखन्ति।

नरेन्द्रः—त्वम् पश्यसि ? यत् एते कुमाराः केन लिखन्ति ?

सुरेन्द्रः—अहम् पश्यामि यत् एते कुमाराः कलमेन लिखन्ति ।

नरेन्द्रः—त्वम् केन लिखसि, ? केन खादसि ? केन पश्यसि ?

सुरेन्द्रः—अहम् कलमेन लिखामि, मुखेन खादामि, नेत्राभ्याम् पश्यामि ।

नरेन्द्रः—साधु, खनित्रेण एकं खातं खन ! अहम् अश्वेन गच्छामि गृहम् ।

सुरेशः—बाढम्, गच्छ गृहम्, अहम् खनित्रेण खनामि खातम् ।

नरेन्द्रः—यूयम् अत्र तिष्ठथ । अहम् राज्ञः पश्यामि ।

सुरेशः—त्वम् गच्छ, पश्य राज्ञः, वयम् अत्र नूनं तिष्ठामः ।

**अभ्यासायः**—उपरि एषः कस्य कुमारः ? अधस्तात् अपि एतौ कौ ?
एते किम् कुर्वन्ति अत्र ? त्वम् केन पश्यसि ?
अहम् केन वदिष्यामि ! त्वम् कुत्र तिष्ठसि ?

## अनद्यतने लङ्

| | | ए० व० | द्वि० व० | ब० व० |
|---|---|---|---|---|
| प्र० | पु० | अपश्यत् | अपश्यताम् | अपश्यन् |
| म० | पु० | अपश्यः | अपश्यतम् | अपश्यत |
| उ० | पु० | अपश्यम् | अपश्याव | अपश्याम |

## कर्मणि द्वितीया

| | ए० व० | द्वि० व० | ब० व० |
|---|---|---|---|
| पितृ | पितरम् | पितरौ | पितॄन् |
| राजन् | राजानम् | राजानौ | राज्ञः |
| पथिन् | पन्थानम् | पन्थानौ | पथः |

## गुरुदेवः



विधुः—भोः भानो ! त्वम् अपश्यः एतत् चित्रम् ?

भानुः—विधुदेव ! अहम् अपश्यम् एतत् चित्रम् ।

विधुः—कदा अपश्यः चित्रम् एतत् ?

भानुः—षष्ठकक्षायां संस्कृतालोके अहम् अपश्यम् चित्रम् एतत् ।

विधुः—सत्यम् , एतस्मिन् चित्रे एते के ?

भानुः—एतस्मिन् चित्रे एकः गुरुदेवः अपरे तस्य शिष्याः ।

विधुः—शिष्याः एते कम् नमन्ति ?

भानुः—एते शिष्याः निजं गुरुदेवम् नमन्ति ?

विधुः—भानो ! त्वम् पश्य एते शिष्याः केन नमन्ति गुरुदेवम् ।

भानुः—पश्यामि भोः एते शिष्याः नमन्ति गुरुदेवम् हस्ताभ्याम् ।

विधुः—त्वम् नम गुरुदेवम् विनयेन ।

भानुः—अहम् विनयेन हस्ताभ्याम् मस्तकेन च नमामि गुरुदेवम् ।

विधुः—त्वम् यथा गुरुम् नमसि तथा पितरम् नमसि ?

भानुः—अहम् यथा गुरुम् नमामि तथा पितरम्, मातरम्, भ्रातरम् सर्वान् भद्रपुरुषान् नमामि

विधुः—साधु ! भानो ! साधु ! तेन त्वाम् सर्वेव दन्ति सुशीलम् ।

भानुः—चित्रे गुरुदेवः विनीतेभ्यः छात्रेभ्यः वितरति शुभाशीर्वादम् ।

विधुः—सर्वे जनाः विनयेन प्रभाविताः शुभाशीर्वादम् वितरन्ति विनीतेभ्यः ।

भानुः—अहम् सर्वैः सह विनयेन आचरामि गृहे विद्यालये अपि ।

**अभ्यासार्थः**—एतत् चित्रम् पश्यसि त्वम् ? पश्य एतत् दृश्यम् ? सर्वे छात्राः कम् नमन्ति ? केन छात्राः नमन्ति ?

## आज्ञायाम् लोट्

| | | ए० व० | द्वि० व० | ब० व० |
|---|---|---|---|---|
| प्र० | पु० | पश्यतु | पश्यताम् | पश्यन्तु |
| म० | पु० | पश्य | पश्यतम् | पश्यत । |
| उ० | पु० | पश्यामि | पश्याव | पश्याम । |

## करणे तृतीया

| | ए० व० | द्वि० व० | ब० व० |
|---|---|---|---|
| पितृ | पित्रा | पितृभ्याम् | पितृभिः |
| राजन् | राज्ञा | राजभ्याम् | राजभिः |
| पथिन् | पथा | पथिभ्याम् | पथिभिः |

---

## सुभाषितम्

वैरं विवर्धयति सख्यमपाकरोति,
रूपं विरूपयति निन्द्यमतिं तनोति ।
दौर्भाग्यमानयति शातयते च कीर्त्तिं,
रोषोऽत्र रोषसदृशो न हि शत्रुरस्ति ॥ १ ॥

वित्ताशया खनति भूमितलं सतृष्णो,
धातून् गिरेर्धमति धावति भूमिपाग्रे ।
देशान्तराणि विविधानि विगाहते च,
पुण्यं विना न च नरो लभते स तृप्तिम् ॥ २ ॥

## पथिकः



दिनेशः—हं हो सुरेश ! एते पथिकाः के ?

रमेशः—कथम् एते पथिकाः ?

दिनेशः—ये पथि गच्छन्ति धावन्ति ते पथिकाः भवन्ति ।

रमेशः—भो दिनेश ! एते पथिकाः बालकाः ।

दिनेशः—एते बालकाः कुत्र धावन्ति ?

रमेशः—एते बालकाः पथि धावन्ति ।

दिनेशः—अहो एषः पन्थाः विशालः ।

रमेशः—वस्तुतः एषः पन्थाः विशालः समतलः च ।

दिनेशः—एते बालकाः राजकुमाराः ।

रमेशः—तर्हि किमर्थम् एते राजकुमाराः धावन्ति ?

दिनेशः—राज्ञे रोचन्ते एते राजकुमाराः ।

रमेशः—यद्यपि सर्वेभ्यः पितृभ्यः रोचन्ते पुत्राः किन्तु राज्ञे अधिकं रोचन्ते राजकुमाराः ।

दिनेशः—एते बालकाः वेगेन धावन्ति । यदा एते कुत्रापि पतिष्यन्ति तदा हताः आहताः वा भविष्यन्ति ।

रमेशः—बान्धव ! एते बालकाः गृहे धावन्ति ?

दिनेशः—प्रियरमेश ! एते राजकुमाराः न गृहे अत्र पथि धावन्ति । त्वं द्रक्ष्यसि पथिकान् राजकुमारान् ।

रमेशः—अवश्यम् अहम् द्रक्ष्यामि एतान् राजकुमारान् ।

दिनेशः—एते अत्रैव आगच्छन्ति । अत्र सर्वे द्रक्ष्यन्ति, अहम् अपि द्रक्ष्यामि, त्वम् अपि द्रक्ष्यसि ।

**अभ्यासाय**—एते कुत्र धावन्ति ? पथि एते के धावन्ति ? चित्रे कान् पश्यसि ? अहम् मार्गे द्रक्ष्यामि तान् ? एते गृहे धावन्ति ? एते किमर्थम् धावन्ति ?

## भविष्यति लृट्

| | ए० व० | द्वि० व० | ब० व० |
|---|---|---|---|
| प्र० पु० | द्रक्ष्यति | द्रक्ष्यतः | द्रक्ष्यन्ति |
| म० पु० | द्रक्ष्यसि | द्रक्ष्यथः | द्रक्ष्यथ |
| उ० पु० | द्रक्ष्यामि | द्रक्ष्यावः | द्रक्ष्यामः |

## सम्प्रदाने चतुर्थी

| | ए० व० | द्वि० व० | ब० व० |
|---|---|---|---|
| पितृ | पित्रे | पितृभ्याम् | पितृभ्यः |
| राजन् | राज्ञे | राजभ्याम् | राजभ्यः |
| पथिन् | पथे | पथिभ्याम् | पथिभ्यः |

## सरोवरः



रामः—अये श्याम ! पश्य सरोवरम् एषः कीदृशः रमणीयः ।

श्यामः—वस्तुतः एतस्य सरोवरस्य प्राकृतिकदृश्यम् मनः हरति !

राम:—यद्यपि कमलम् अत्र न पश्यामि तथापि एतस्य रमणीयतायाम् न कापि हानिः। जलम् कीदृशम् निर्मलम्। स्थाने स्थाने शैवालम् सरोवरस्य शोभावर्धने साधकम् पश्यामि

श्याम:—सत्यम् एव, सरोवरस्य उत्तरतटे तालतरुद्वयम् एकम् कुटीरम् च। कुटीरस्य गवाक्षम् द्वारम् च पश्यामि।

राम:—मित्रश्याम! पश्य, एते पुरुषाः कीदृशम् तरन्ति। एतेषाम् मस्तके शिखा स्कन्धे यज्ञोपवीतम् पश्यामि। एते हस्ताभ्याम् जलम् स्फारयन्ति वेगेन, सर्पन्ति च। नद्याः प्रवाहे तरणम् कठिनम् भवति, सागरे तु ततो अपि कठिनम्। सरोवरेषु मानसरोवरम् सर्वोत्तमम् जनाः वदन्ति।

श्याम:—अहम् सरोवरे तरामि। त्वम् तरसि न वा? धीवराःतरणे भवन्ति कुशलाः। जले मत्स्यादयः जीवाः तरन्ति।

**अभ्यासाय**—एतत् कस्य चित्रम्? सरोवरस्य उत्तरतटे एतानि कानि? सरोवरे के तरन्ति? एतेषां मस्तके स्कन्धे च किम्? एते पुरुषाः केन जलम् स्फारयन्ति? तरणे के भवन्ति कुशलाः?

## विधौलिङ्

| | ए० व० | द्वि० व० | ब० व० |
|---|---|---|---|
| प्र० पु० | पश्येत् | पश्येताम् | पश्येयुः। |
| म० ० | पश्येः | पश्येतम् | पश्येत। |
| उ० पु० | पश्येयम् | पश्येव | पश्येम। |

## अपादाने पञ्चमी

| | ए० व० | ए० व० | ए० व० |
|---|---|---|---|
| पितृ | पितुः | पितृभ्याम् | पितृभिः । |
| राजन् | राज्ञः | राजभ्याम् | राजभ्यः । |
| पथिन् | पथः | पथिभ्याम् | पथिभ्यः । |



## सीवनम्



सीता—अये गीते ! त्वम् सम्यक् सीव्यसि । विमला न सम्यक् सीव्यति । अहम् अपि शोभनम् सीव्यामि ।

गीता—सीते त्वम् साधु वदसि। अहम् सूच्या सीव्यामि, यन्त्रेण न साधु सीव्यामि। दरयोजी सूच्या यन्त्रेण च अपि वेगेन साधु सीव्यति।

सीता—अत्र चित्रे तिस्रः महिलाः सूच्या सीव्यन्ति वस्त्राणि। तव माता भगिन्याः गृहे सीव्यति न वा। सीवनम् मानवानां जीवने परमम् लाभकरम् कार्यम्, एषा दीव्या कला। सीवनेन निर्धनाः पुरुषाः, स्त्रियः च अपि निज-जीवनयापने भवन्ति सफलाः। न किम् अपि कर्म निन्द्यम्। मानवस्य आदर्शहीनम् कर्म जीवनम् वा भवति निन्द्यम्।

गीता—एतस्मिन् चित्रे सीवनयन्त्रम् न पश्यामि। यद्यपि यन्त्रेण झटिति सीवनम् भवति। हस्तेन यदा एकम् वस्त्रम् सीव्यामि, तदा यन्त्रेण पञ्च। एकम् यन्त्रम् पादाभ्याम् चलति। द्वितीयम् हस्तेन। दरयोजी यन्त्रस्य चालको वा एकेन हस्तेन यन्त्रम् चालयति, अपरेण यन्त्रसूचीं वस्त्रे लगयति। मम गृहे मदीया भगिनी एतादृशम् यन्त्रम् चालयति, बहूनि वस्त्राणि सीव्यति।

**अभ्यासाय:**—गीता वस्त्रम् सीव्यति ? दरयोजी कथम् सीव्यति ? सीवनेन कः लाभः ? गृहे भगिनी किम् करोति ? यन्त्रम् कथम् चालयेत्

## सम्बन्धे षष्ठी

| | | | |
|---|---|---|---|
| पितृ | ए० व० | द्वि० व० | ब० व० |
| | पितुः | पित्रोः | पितृणाम् । |
| राजन् | राज्ञः | राज्ञोः | राज्ञाम् । |
| पथिन् | पथः | पथोः | पथाम् । |

## धेनुः




महम्मदः—भो सुशील ! पश्य चित्रम् एतत् ।

सुशीलः—पश्यामि मित्र ! सुन्दरम् एतत् चित्रम् ।

श्यामदासः—एषः अश्वोपरि आरूढः। अश्वः विज्ञः पशुः पालकस्य निदेशे सततम् चलति। अश्ववारः कुत्र गच्छति?

श्यामदासः—एषः अश्ववारः कुत्र गच्छति? इति कः वदिष्यति? अनुभवामि एषः अश्ववारः आखेटाय वने गच्छति।

रामदासः—एषः आखेटे किम् करिष्यति?

श्यामदासः—आखेटे सिंहव्याघ्रशूकरादीन् पशून् हनिष्यति।

रामदासः—एतस्य हस्ते किम्?

श्यामदासः—एतस्य हस्ते करवालम् ( असिम् ) पश्यामि।

रामदासः—एषः करवालेन किम् करिष्यति?

श्यामदासः—एषः करवालेन भीषणान् पशून् हनिष्यति।

रामदासः—एषः समीपस्थं पशुं करवालेन हनिष्यति। किन्तु यः दूरम् भवेत् तं कथम् करवालेन हनिष्यति?

श्यामदासः—दूरस्थं न करवालेन। तादृशं दूरस्थम् नालीकेन हनिष्यति।

रामदासः—अयम् अश्वः पुष्टः सुन्दरः दीर्घः। तेन मह्यम् रोचते। भोः श्यामदास! अश्वस्य मुखे किम् अस्ति?

श्यामदासः—अश्वस्य मुखे खलीनः अस्ति यः लौहेन निर्मितो भवति। तस्य संलग्नः रज्जुः प्रग्रहः भवति। येन अश्ववारः अश्वं नियन्त्रयति।

रामदासः—भो श्यामदास ! नरेन्द्रस्य अश्वस्तु नैतादृशः ।

श्यामदासः—रामदास ! अश्वानाम् अनेके प्रकाराः भवन्ति । तेषु सैन्धवाः पारसीकाः, दीर्घाकाराः सुकुमाराः भवन्ति । किन्तु भूटानिकाः तिब्बतीयाः खर्वाकाराः प्रौढाः भवन्ति ।

रामदासः—भोः श्याम ! भूटानिकाः अश्वाः मार्गे न श्रान्ताः भवन्ति । एकचालेन सदा सर्वत्र चलन्ति धावन्ति च । कठिनमार्गेऽपि न विरमन्ति । तेषाम् शरीरम् सुदृढम् भवति । तेषाम् पादाः प्रौढाः भवन्ति । स्कन्धोपरि तेषाम् सटाः चामरवत् शोभनम् स्फुरन्ति ।

श्यामदासः—सत्यम् । पारसिकाः सैन्धवाः वा अश्वाः तु सुकुमाराः भवन्ति, न दूरम् धावन्ति वेगेन ।

रामदासः—विदेशीयानाम् अश्वानाम् सर्पणखेला (रेस) भवति । तत्र यः अश्वः सर्पणे प्रखरः वेगवान् प्रथमः भवति, स प्रचुरम् पुरस्कारम् लभते । तादृशानाम् अश्वानाम् लालनम् पालनम् महता प्रयत्नेन भवति ।

**अभ्यासाय**—एतत् कस्य चित्रम् ? अश्वोपरि कः ? अश्ववारः कुत्र गच्छति ? अश्वस्य के प्रकाराः ? एतस्य अश्वस्य मुखे किम् ? अश्ववारस्य हस्ते किम् ? तेन किम् करोति ? आखेटके कीदृशं पशुन् हनिष्यति ?

## जङ्गलम्




चित्रे एषः पुरतः जङ्गलस्य वहिर्भागः। एतादृशे वनस्य वहिर्भागे पशवः चरन्ति। अत्र एकाम् पर्वतीयाम् अजाम् पश्यामि, यस्या मुखे घासः लम्बते। गावः वृषभाः अश्वाः च चरन्ति। ते प्रातः आगच्छन्ति, सायं च गच्छन्ति। वने वन्याः पशवः, सिंहाः, हरिणाः, वृकाः, वानराः च विहरन्ति। यत्र अजा तिष्ठति स समतलभूमिः। उपरि यत्र वृक्षाः लसन्ति, सा उच्चावचा भूमिः। तत्र जङ्गले अनेकधा वृक्षाः भवन्ति। क्वचित् अश्वत्थः (पिप्पलः),

क्वचित् न्यग्रोधः ( वटः ), कुत्रचित् पर्कटी, क्वचित् शाल्मली, कुत्रचित् अशोकः, क्वचित् तालः, खर्जूरः च। एवं नाना प्रकाराः वृक्षाः जङ्गले भवन्ति। पर्वतीयवने शालवृक्षाः, शीशपवृक्षाः पङ्क्तिवद्धाः प्रकृतिशोभां वर्धयन्ति। येषाम् उपयोगम् जनाः गृह-निर्माणाय कुर्वन्ति। आम्रवृक्षः, जाम्बूनदः, मधूकः, पनसः, अधिकतरेण उद्याने भवन्ति। वनस्य प्रकृतिसौन्दर्यम् मनोहरम् भवति। उपरि आकाशे दीर्घायतवृक्षाणां हरीतिमा, अधस्तात् धरातले दूर्वाकुशकाशदलानि प्रकृतिपरिच्छदम् इव कस्य रसिकजनस्य हृदयम् नाकर्षति? यत्र सिंहानाम् हुङ्कारः, गजानाम् चीत्कारः, शूकराणाम् वृकाणाम् च संरावः धीराणाम् अपि धैर्यम् हरति। तत्र शुक–पिक–सारसादीनाम् पक्षिणाम् कूजनम् वनस्य सरसतां बहुलं वर्धयति।

वनेषु स्वास्थ्यम् वर्धते। प्रकृतिसौन्दर्यम् तत्रत्याः सहजा शान्तिः अनायासेन जीवनस्य प्राप्तसामग्री परिहरति मानसचाञ्चल्यम् मानवानाम्। शीतमन्दसुगन्धवायुः निर्मलम् जलम् तादृशम् नगरे कस्मिन् सुलभम्? तेनैव ऋषीणाम् आश्रमाः वनेषु एव अभवन् प्राचीनकाले।

**अभ्यासाय**—एतत् कस्य चित्रम्? वने के के वृक्षाः? वने के के पक्षिणः? वने के के पशवः? वनोद्यानयोः कः भेदः। वने के के वृक्षाः? उद्याने च के के?

—o—

## जयनारायणविद्यालयः

ज्ञानार्जनाय सदाचारः परिश्रमः च प्रथमम् अपेक्ष्यते। सदाचारेण परिश्रमेण विना कश्चन अपि विद्यार्थी कदापि न सफलः भवति। ज्ञानार्जनस्य विचारेण काशी विद्यानाम् केन्द्रम् अस्ति। तेनात्र विश्वविद्यालय क्विंसकालेज—डी. ए. वी. कालेज—उदयप्रतापकालेज हरिश्चन्द्रकालेज—बंगालीकालेज—सनातनधर्मकालेजप्रभृतयः अनेके विद्यालयाः सन्ति। यत्र देशदेशान्तरेभ्यः ज्ञानाशया आगत्य विद्यार्थिनः विद्यार्जनम् कुर्वन्ति। परन्तु तेषु विद्यालयेषु 'जयनारायणविद्यालयः' परमप्राचीनः अस्ति। यस्य संस्थापनम् चतुर्दशाधिके अष्टादशशतके १८१४ खिष्टाब्दे राजाधिराजः श्रीजयनारायणघोषाणमहाशयः अकरोत्। यः अधुनापि काश्याम् हिन्दुविश्वविद्यालयम् गच्छता संसरणेन संलग्नः रामापुरे विशालेन प्राकारेण परिवृतः विलसति। विद्यालयस्य त्रीणि भवनानि एकः प्रशस्तः छात्रावासः अध्यक्षभवनम् च तदन्तर्गतानि सन्ति। एतस्मात् विद्यालयात् निर्गताः अनेके छात्राः भारतस्य कोणे कोणे उच्चपदेषु प्रतिष्ठिताः विद्यालयस्य गौरवम् वर्धयन्ति।

**अभ्यासाय**—जयनारायणविद्यालयः कुत्र अस्ति? अस्य संस्थापनम् कः अकरोत्? कदा अकरोत्? एषः विद्यालयः कस्य संसरणस्य समीपे अस्ति?

## ज्ञानगौरवम्

ज्ञानेन पुंसाम् सकलार्थसिद्धिः, ज्ञानादृते काचन नार्थसिद्धिः।
ज्ञानस्य ज्ञात्वैव गुणान् कदाचित्, ज्ञानम् न मुञ्चन्ति महानुभावाः।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ज्ञानार्जनम् | = | ज्ञान + अर्जनम् | = | अ + अ | = | आ | = | ज्ञानार्जनम् |
| तेनात्र | = | तेन + अत्र | = | अ + अ | = | आ | = | तेनात्र |
| खिष्ट्राब्दे | = | खिष्ट्र + अब्दे | = | अ + अ | = | आ | = | खिष्ट्राब्दे |
| राजाधिराजः | = | राज + अधिराजः | = | अ + अ | = | आ | = | राजाधिराजः |
| ज्ञानाशया | = | ज्ञान + आशया | = | अ + आ | = | आ | = | ज्ञानाशया |
| कदापि | = | कदा + अपि | = | आ + अ | = | आ | = | कदापि |
| अधुनापि | = | अधुना + अपि | = | आ + अ | = | आ | = | अधुनापि |
| विद्यार्जनम् | = | विद्या + अर्जनम् | = | आ + अ | = | आ | = | विद्यार्जनम् |
| विद्यालयः | = | विद्या + आलयः | = | आ + आ | = | आ | = | विद्यालयः |
| महाशयः | = | महा + आशयः | = | आ = आ | = | आ | = | महाशयः |

| | | | |
|---|---|---|---|
| एवम्—इ + इ = ई | कवि + इन्द्रः | = | कवीन्द्रः |
| इ + ई = ई | कवि + ईशः | = | कवीशः |
| ई + इ = ई | गौरी + इन्द्रः | = | गौरीन्द्रः |
| ई + ई = ई | गौरी + ईशः | = | गौरीशः |
| उ + उ = ऊ | भानु + उदयः | = | भानूदयः |
| उ + ऊ = ऊ | भानु + ऊहितः | = | भानूहितः |
| ऊ + उ = ऊ | सरयू + उद्गमः | = | सरयूद्गमः |
| ऊ + ऊ = ऊ | सरयू + ऊर्मिः | = | सरयूर्मिः |

**'अकः सवर्णे दीर्घः' ( दीर्घसन्धिः )**

**समानस्वरस्य समानस्वरेण सह मेलनम् दीर्घसन्धिः भवति**

## सूर्योदयः

नरेशः—भोः महेश ! महीन्द्रः कस्मिन् विद्यालये पठति ?

महेशः—यस्मिन् विद्यालये रवीन्द्रः पठति तस्मिन् विद्यालये महीन्द्रः पठति ।

नरेशः—सुधीन्द्रः केन सह वसति ?

महेशः—सुधीन्द्रः सुधाकरेण सह वसति पठति च प्रयागे ।

नरेशः—भोः महेश ! त्वम् अधुना कुत्र गच्छसि ?

महेशः—अहम् अधुना देवालयम् गच्छामि ।

नरेशः—किमर्थम् तत्र गच्छसि ?

महेशः—गौरीशं अर्चितुम् गच्छामि देवालयम् ।

नरेशः—रवीन्द्रः कदा आगमिष्यति ?

महेशः—ग्रीष्मावकाशे महीन्द्रेण सह रवीन्द्रः आगमिष्यति ।

नरेशः—त्वम् तरसि न वा ?

महेशः—अहम् न तरामि, नौकया नदीपारम् गच्छामि ।

नरेशः—भोः महेश ! पश्य प्रभाते सूर्योदयशोभाम् ?

महेशः—वस्तुतः सूर्योदयशोभा कीदृशी रमणीया प्रतिभाति ? मृगेन्द्रैः सेवितम् वनम् नरेन्द्रैः प्रतिष्ठितम् नगरम् च सूर्योदये कस्य मनः नाकर्षति ?

'सुधीन्द्रः, रवीन्द्रः, महीन्द्रः, गौरीशम्' एतेषाम् विग्रहम् कुरु ।

| | |
|---|---|
| वारि + इन्दुः | वाणी + ईशः |
| गिरि + ईशः | नदी + ईशः |
| भानु + उदयः | विधु + उदयः |
| राहु + उत्पत्तिः | केतु + उपरि |

एषु सन्धिम् कुरु ।

---

## उद्योगः सर्वसाधकः

निदानं सर्वभद्राणां मूलं निखिलसम्पदाम् ।
उद्योगः पुरुषार्थानां चतुर्णामपि साधकः ॥ १ ॥
उद्योगाल्लभते विद्यां ततः संलभते धनम् ।
धनाद्ध धर्मस्ततो लोके नरः संलभते सुखम् ॥ २ ॥
नितरां शिथिलोद्योगो भेकान्नाप्नोति वासुकिः ।
कृतनित्यसमुद्योगो मार्जारो लेढि पायसम् ॥ ३ ॥
उद्योगेन हि सिध्यन्ति मनुष्याणां मनोरथाः ।
उद्योगभीतिभीतस्य वृथा शूरस्य संकथा ॥ ४ ॥
निर्धनोऽप्यकुलीनोऽपि क्षीणदेहोऽप्यथैककः ।
समुद्योगद्वितीयस्तु लोकान् जयति दुर्जयान् ॥ ५ ॥
उद्योगी लभते विद्यामुद्योगो लभते धनम् ।
उद्योगी लभते मानमुद्योगी लभते सुखम् ॥ ६ ॥
सेवितास्तेन राजानः सेवितास्तेन पण्डिताः ।
सेविताः कवयस्तेन ह्युद्यमो येन सेवितः ॥ ७ ॥

## अस्माकम् स्वदेशः

अहो ! एतत् पुरतः अस्माकम् भारतदेशस्यापूर्वम् चित्रम्। अहम् बद्धाञ्जलिना नतमस्तकेन नमामि निश्छलहृदयेन स्मरामि, संस्कृतवचनेन वन्दामि। पुरा यस्मिन् देशे महामहिमशाली राजाधिराजः सम्राट् भरतः अवतरितः लोकोत्तराम् ख्यातिम् उपार्जयत्। यस्य भारतस्य माहात्म्येन प्रभाविताः देवाः अपि स्वर्गं विहाय भारते वासम् वाञ्छन्ति। सः स्वर्गदेशः कथम् न वन्दनीयः ! कथम् न स्पृहणीयः !! बहुभिः महर्षिभिः राजर्षिभिः महात्मभिः विद्वद्भिः धनिकैः बलिष्ठैः चायम् भारतदेशः सर्वात्मना पूर्णः सम्पन्नः। एतस्मिन् देशे भगवान् स्वयम् मानवरूपेणावतरतिस्म। संसारस्यादिकविः वाल्मीकिः मुनिः, पुराणाचार्यः व्यासदेवः, नाट्याचार्यः भासः कवीशः कालिदासः अनेकशः कवयः प्रादुरभवन्। भक्तशिरोमणिः प्रह्लादः वराहमिहिरः, आयुर्वेद प्रवर्त्तकाः धन्वन्तरिसुश्रुतचरकादयः नैयायिकाः काणादाः वैयाकरणाः पाणिनिकात्यायनपतञ्जलयः, दार्शनिकाः श्रीशङ्कराचार्यः, वीरव्रतिनः राणाप्रतापः शिवाजी गुरुगोविन्दसिंहः देशसुधारकाः महात्मागान्धी महामनाः मालवीयः, विश्वकवीन्द्रः रवीन्द्रः च यस्मिन् देशे अभवन् तस्य देशस्य गौरववर्णने कः पारयिष्यति ?

नास्ति एतादृशः कश्चन देशः संसारे। देवी प्रकृतिः स्वयम् एतस्य सौन्दर्यदुर्गे कश्मीरे सुखेन निवसति। अखिलविभवविलासपूर्णः देशोत्तमः भारतदेशः एषः पुरुषोत्तम इव विलसति। अस्य मस्तकोपरि हिमालयः कटिदेशे विन्ध्याचलः पादमूले भारतसागरः स्नायुपुञ्ज इव ब्रह्मपुत्रः, गङ्गायमुनासरयूप्रभृतयः नद्यः जलेन मृत्तिकया च भारतभूमिं सजलां सुफलां सफलयन्ति। तेन एषः भारतदेशः विश्ववन्द्यः। अतश्चास्माकं भारतीयानाम् विशेषतया छात्राणाम् कर्त्तव्यं प्रधानम् अस्ति यत् एतस्य स्वदेशस्य कीर्तिपताका पूर्ववत् संसारे निरन्तरं स्फुरतु।

अभ्यासाय—अत्र दर्शय दीर्घसन्धिगुणसन्धिपदानि तेषाम् विग्रहम् च।

—o—

## वनवैभवम्

पूर्वपाठे वनप्रान्तस्य बहिर्भागस्य चित्रम् । एतस्मिन् विशाले वने एकत्र शालवृक्षाः अपरत्र पिप्पलवृक्षाः वटपर्कटीवृक्षाः, अन्यत्र अशोकशिंशपपलाशवृक्षाः विराजन्ते । आम्रवृक्षाः मधूकवृक्षाः चाधिकां शोभां वर्धयन्ति । अत्र क्वचित् मृगेन्द्राः गर्जन्ति, क्वचन गजेन्द्राः चीत्कारयन्ति, अन्यत्र वृकाः तर्जन्ति । शृगालाः धावन्ति । वृक्षोपरि शुकाः, कोकिलाः, सारसाः, मयूराः, अनेकशः खगाः कूजन्ति । घोराः भीषणाः सर्पाः गह्वरेषु यत्र तत्र सर्पन्ति स्वपन्ति च । सूर्यास्तसमये वनस्य भीषणता अधिका वर्द्धते । सूर्योदये वनस्य प्राकृतिकशोभा दर्शनीया भवति। जङ्गलेषु कोलभिल्लकिराताः वनेचराः वसन्ति, मांसाहारेण जीवन्ति च । नरेशाः, धनेशाः वने आखेटाय आगच्छन्ति । निर्झरात् जलोद्गमः वेगेन भवति । तेन यदा कदा वृक्षोत्पाटनम् भवति। पर्वतेन्द्रस्य हिमालयस्य वनशोभा परमा विचित्रा भवति।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| गजेन्द्रः, | गज + इन्द्रः | = | अ + इ | = | ए | = | गजेन्द्रः |
| सूर्योदयः | सूर्य + उदयः | = | अ + उ | = | ओ | = | सूर्योदयः |

एवम्—'गजेन्द्रः, गणेशः, रमेन्द्रः, रमेशः, भाग्योदयः, जलोर्मिः, विद्योपार्जनम् गङ्गोर्मिः' एतेषाम् विग्रहम् कुरु।



## 'आद्गुणः' ( गुणसन्धिः )

अकारः आकारो वा इकारेण, ईकारेण वा सह एकारः उकारेण वा ऊकारेण च सह ओकारः भवति ।

## व्यावहारिकशब्दाः

| | | | |
|---|---|---|---|
| यहां | अत्र | कैसा | कीदृशः |
| वहां | तत्र | जैसा | यादृशः |
| कहां | कुत्र | कल ( बीता ) | ह्यः |
| जहां | यत्र | परसों ( बीता ) | परह्यः |
| यहांसे | इतः | कल ( आनेवाला ) | श्वः |
| वहांसे | ततः | परसों (आनेवाला) | परश्वः |
| कहांसे | कुतः | यहां वहां | अत्र तत्र |
| जहांसे | यतः | जहां कहीं | यत्र कुत्र |
| ऐसा | एतादृशः | जहां तहां | यत्र तत्र |
| वैसा | तादृशः | इधर-उधर | इतस्ततः |



| | |
|---|---|
| अश्ववारः = असवार ( सवार ) | प्रग्रहः = बागडोर |
| करवालः = तलवार | सटा = गर्दन के बालों का गुच्छा |
| नालीकम् = बन्दूक | उच्चावचा = ऊँचीनीची |
| खलीनः = लगाम | बहुलम् = बहुत |



# शब्दरूपावली

## कर्त्तरि प्रथमा — कर्मणि द्वितीया

| | ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० |
|---|---|---|---|---|---|---|
| पितृ | पिता | पितरौ | पितरः | पितरम् | पितरौ | पितॄन् |
| राजन् | राजा | राजानौ | राजानः | राजानम् | राजानौ | राज्ञः |
| पथिन् | पन्थाः | पन्थानौ | पन्थानः | पन्थानम् | पन्थानौ | पथः |
| धेनु | धेनुः | धेनू | धेनवः | धेनुम् | धेनू | धेनूः |
| रुचि | रुचिः | रुची | रुचयः | रुचिम् | रुची | रुचीः |
| पयस् | पयः | पयसी | पयांसि | पयः | पयसी | पयांसि |
| वारि | वारि | वारिणी | वारीणि | वारि | वारिणी | वारीणि |
| एक | एकः | | | एकम् | | |
| द्वि | | द्वौ | | | द्वौ | |

# धातुरूपावली

## वर्तमाने ( लट् ) वर्तमानकालमें

| | प्रथमपुरुषे | | | मध्यमपुरुषे | | |
|---|---|---|---|---|---|---|
| | ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० |
| स्था ( तिष्ठ ) | तिष्ठति | तिष्ठतः | तिष्ठन्ति | तिष्ठसि | तिष्ठथः | तिष्ठथ |
| दृश् ( पश्य ) | पश्यति | पश्यतः | पश्यन्ति | पश्यसि | पश्यथः | पश्यथ |
| कथ् | कथयति | कथयतः | कथयन्ति | कथयसि | कथयथः | कथयथ |

## अनद्यतने लङ् ( अनद्यतनभूतकाल में )

| प्रथमपुरुषे | | | मध्यमपुरुषे | | |
|---|---|---|---|---|---|
| ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० |
| अतिष्ठत् | अतिष्ठताम् | अतिष्ठन् | अतिष्ठः | अतिष्ठतम् | अतिष्ठत |
| अपश्यत् | अपश्यताम् | अपश्यन् | अपश्यः | अपश्यतम् | अपश्यत |
| अकथयत् | अकथयताम् | अकथयन् | अकथयः | अकथयतम् | अकथयत |

| करणे तृतीया | | | सम्प्रदाने चतुर्थी | | |
|---|---|---|---|---|---|
| ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० |
| पित्रा | पितृभ्याम् | पितृभिः | पित्रे | पितृभ्याम् | पितृभ्यः |
| राज्ञा | राजभ्याम् | राजभिः | राज्ञे | राजभ्याम् | राजभ्य; |
| पथा | पथिभ्याम् | पथिभिः | पथे | पथिभ्याम् | पथिभ्यः |
| धेन्वा | धेनुभ्याम् | धेनुभिः | धेनवे | धेनुभ्याम् | धेनुभ्य; |
| रुच्या | रुचिभ्याम् | रुचिभिः | रुचये | रुचिभ्याम् | रुचिभ्यः |
| पयसा | पयोभ्याम् | पयोभिः | पयसे | पयोभ्याम् | पयोभ्यः |
| वारिणा | वारिभ्याम् | वारिभिः | वारिणे | वारिभ्याम् | वारिभ्यः |
| एकेन | | | एकस्मै | | |
| | द्वाभ्याम् | | | द्वाभ्याम् | |

उत्तमपुरुषे

| ए० व० | द्वि० व० | ब० व० |
|---|---|---|
| तिष्ठामि | तिष्ठावः | तिष्ठामः |
| पश्यामि | पश्यावः | पश्यामः |
| कथयामि | कथयावः | कथयाम |

उत्तमपुरुषे

| ए० व० | द्वि० व० | ब० व० |
|---|---|---|
| अतिष्ठम् | अतिष्ठाव | अतिष्ठाम |
| अपश्यम् | अपश्याव | अपश्याम |
| अकथयम् | अकथयाव | अकथयाम |

| अपादाने पञ्चमी | | | सम्बन्धे षष्ठी | | |
|---|---|---|---|---|---|
| ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० |
| पितुः | पितृभ्याम् | पितृभ्यः | पितुः | पित्रोः | पितृणाम् |
| राज्ञः | राजभ्याम् | राजभ्यः | राज्ञः | राज्ञोः | राज्ञाम् |
| पथः | पथिभ्याम् | पथिभ्यः | पथः | पथोः | पथाम् |
| धेनोः | धेनुभ्याम् | धेनुभ्यः | धेनोः | धेन्वोः | धेनूनाम् |
| रुचेः | रुचिभ्याम् | रुचिभ्यः | रुचेः | रुच्योः | रुचीनाम् |
| पयसः | पयोभ्याम् | पयोभ्यः | पयसः | पयसोः | पयसाम् |
| वारिणः | वारिभ्याम् | वारिभ्यः | वारिणः | वारिणोः | वारिणाम् |
| एकस्मात् | | | एकस्य | | |
| | द्वाभ्याम् | | | द्वयोः | |

## भविष्यति लृट् ( भविष्यत्कालमें )

| प्रथमपुरुषे | | | मध्यमपुरुषे | | |
|---|---|---|---|---|---|
| ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० |
| स्थास्यति | स्थास्यतः | स्थास्यन्ति | स्थास्यसि | स्थास्यथः | स्थास्यथ |
| द्रक्ष्यति | द्रक्ष्यतः | द्रक्ष्यन्ति | द्रक्ष्यसि | द्रक्ष्यथः | द्रक्ष्यथ |
| कथयिष्यति | कथयिष्यतः | कथयिष्यन्ति | कथयिष्यसि | कथयिष्यथः | कथयिष्यथ |

## आज्ञायाम् लोट् ( आज्ञा में )

| प्रथमपुरुषे | | | मध्यमपुरुषे | | | उत्तमपुरुषे | | |
|---|---|---|---|---|---|---|---|---|
| ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० |
| तिष्ठतु | तिष्ठताम् | तिष्ठन्तु | तिष्ठ | तिष्ठतम् | तिष्ठत | तिष्ठानि | तिष्ठाव | तिष्ठाम |
| पश्यतु | पश्यताम् | पश्यन्तु | पश्य | पश्यतम् | पश्यत | पश्यानि | पश्याव | पश्याम |
| कथयतु | कथयताम् | कथयन्तु | कथय | कथयतम् | कथयत | कथयानि | कथयाव | कथयाम |

| अधिकरणे सप्तमी | | | सम्बोधने प्रथमा | | |
|---|---|---|---|---|---|
| ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० |
| पितरि | पित्रोः | पितृषु | हेपितः | हे पितरौ | हे पितरः |
| राज्ञि | राज्ञोः | राजसु | हे राजन् | हे रजानौ | हे राजानः |
| पथि | पथोः | पथिषु | हे पथिन् | हे पन्थनौ | हे पन्थानः |
| धेनौ | धेन्वोः | धेनुषु | हे धेनो | हे धेनू | हे धेनवः |
| रुचौ | रुच्वोः | रुचिषु | हे रुचे | हे रुची | हे रुचयः |
| पयसि | पयसोः | पयस्सु | हे पयः | हे पयसी | े पयांसि |
| वारिणि | वारिणोः | वारिषु | हे वारि | हे वारिणी | हे ारीणि |
| एकस्मिन् | | | | | |
| | द्वयोः | | | | |

उत्तमपुरुषे

| ए० व० | द्वि० व० | ब० व० |
|---|---|---|
| स्थास्यामि | स्थास्यावः | स्थास्यामः |
| द्रक्ष्यामि | द्रक्ष्यावः | द्रक्ष्यामः |
| कथयिष्यामि | कथयिष्यावः | कथयिष्यामः |

## विधौ लिङ्

| प्रथमपुरुषे | | | मध्यमपुरुषे | | | उत्तमपुरुषे | | |
|---|---|---|---|---|---|---|---|---|
| ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० |
| तिष्ठेत् | तिष्ठेताम् | तिष्ठेयुः | तिष्ठेः | तिष्ठेतम् | तिष्ठेत | तिष्ठेयम् | तिष्ठेव | तिष्ठेम |
| पश्येत् | पश्येताम् | पश्येयुः | पश्येः | पश्येतम् | पश्येत | पश्येयम् | पश्येव | पश्येम |
| कथयेत् | कथयेताम् | कथयेयुः | कथयेः | कथयेतम् | कथयेत | कथयेयम् | कथयेव | कथयेम |

